# Shri Sharabha Nigrahadaruna Saptakam



# श्रीशरभ निग्रहदारुण सप्तकम्

## Document Information

Text title : Sharabha Nigrahadaruna Saptakam by Shri Nrisimha from Akashabhairavakalpa

File name : sharabhanigrahadAruNasaptakam.itx

Category : shiva, saptaka

Location : doc_shiva

Transliterated by : Sivakumar Thyagarajan Iyer shivakumar24 gmail.com

Proofread by : Sivakumar Thyagarajan Iyer, PSA Easwaran psaeaswaran at gmail.com

Description/comments : Akashabhairavakalpa

Latest update : February 22, 2020

Send corrections to : sanskrit@cheerful.com



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

February 22, 2020

*sanskritdocuments.org*

# श्रीशरभ निग्रहदारुण सप्तकम्



ॐ श्रीगणेशाय नमः ।

ध्यानम् -

चन्द्रार्काग्निस्त्रिदृष्टिः कुलिशवरनखश्चञ्चलोऽत्युग्रजिह्वः
कालीदुर्गा च पक्षौ हृदयजठरगो भैरवो वाडवाग्निः ।
ऊरूस्थौ व्याधिमृत्यू शरभवरखगश्चण्डवातातिवेगः
संहर्ता सर्वशत्रून् स जयति शरभः शालुवः पक्षिराजः ॥

कोपोद्रेकातिनिर्यन्निखिलपरिचरत्ताम्रभारप्रभूतं
ज्वालामालाग्रदग्धस्मरतनुसकलं त्वामहं शालुवेश ।
याचे त्वत्पादपद्मप्रणिहितमनसं द्वेष्टि मां यः क्रियाभिः
तस्य प्राणप्रयाणं परशिव भवतः शूलभिन्नस्य तूर्णम् ॥ १॥

शम्भो त्वद्धस्तकुन्तक्षतरिपुहृदयान्निःस्रवल्लोहितौघं
पीत्वा पीत्वाऽतिदिर्घा दिशि दिशि विचरास्त्वद्गणाश्चण्डमुख्याः ।
गर्जन्तु क्षिप्रवेगा निखिलजयकरा भीकराः खेलल्लोलाः
सन्त्रस्ताब्रह्मदेवाः शरभ खगपते त्राहि नः शालुवेश ॥ २॥

सर्वाद्यं सर्वनिष्ठं सकलभयकरं त्वत्स्वरूपं हिरण्यं
याचेऽहं त्वाममोघं परिकरसहितं द्वेष्टि मां यः क्रियाभिः ।
श्रीशम्भो त्वत्कराब्जस्थितकुलिशकराघातवक्षःस्थलस्य
प्राणाः प्रेतेशदूतग्रहगणपरिखाः क्रोशपूर्वं प्रयान्तु ॥ ३॥

द्विष्मः क्षोण्यां वयं हि तव पदकमलध्याननिर्धूतपापाः
कृत्याकृत्यैर्विमुक्ता विहगकुलपते खेलया बद्धमूर्ते ।
तूर्णं त्वत्पादपद्मप्रधृतपरशुना तुण्डखण्डीकृताङ्गः
सद्वेषी यातु याम्यं पुरमतिकलुषं कालपाशाग्रबद्धः ॥ ४॥

भीम श्रीशालुवेश प्रणतभयहर प्राणजिद्दुर्मदानां
याचेऽहं चास्य वर्गप्रशमनमिह ते स्वेच्छया बद्धमूर्ते ।

त्वामेवाशु त्वदङ्घ्र्यष्टकनखविलसद्ग्रीवजिह्वोदरस्य
    प्राणा यान्तु प्रयाणं प्रकटितहृदयस्यायुरल्पायतेश ॥ ५॥

श्रीशूलं ते कराग्रस्थितमुसलगदावृत्तवात्याभिघातात्
    यातायातारियूथं त्रिदशविघटनोद्भूतरक्तच्छटार्द्रम् ।
सद्दृष्ट्वाऽऽयोधने ज्यामखिलसुरगणाश्चाशु नन्दन्तु नाना
    भूता वेतालपूगः पिबतु तदखिलं प्रीतचित्तः प्रमत्तः ॥ ६॥

अल्पं दोर्दण्डबाहुप्रकटितविनमच्चण्डकोदण्डमुक्तै-
    र्बाणैर्दिव्यैरनेकैः शिथिलितवपुषः क्षीणकोलाहलस्य ।
तस्य प्राणावसानं पर शरभ विभोऽहं त्वदिज्याप्रभावैः
    तूर्णं पश्यामि यो मां परिहसति सदा त्वादिमध्यान्तहेतो ॥ ७॥

इति निशि प्रयतस्तु निरासनो यममुखः शिवभावमनुस्मरन् ।
प्रतिदिनं दशवारदिनत्रयं जपति निग्रहदारुणसप्तकम् ॥ ८॥

इति गुह्यं महाबीजं परमं रिपुनाशनम् ।
भानुवारं समारभ्य मङ्गलान्तं जपेत्सुधीः ॥ ९॥

इति श्री आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे
    नरसिंहकृता शरभस्तुतिः समाप्ता ॥

Encoded by Sivakumar Thyagarajan Iyer

Proofread by Sivakumar Thyagarajan Iyer, Psa Easwaran psaeaswaran

---

*Shri Sharabha Nigrahadaruna Saptakam*

pdf was typeset on February 22, 2020

Please send corrections to *sanskrit@cheerful.com*

